## अथ निर्वेदाष्टकं नाम नवमं

कृताकृते च द्वन्द्वानि कदा शान्तानि कस्य वा ।
एवं ज्ञात्वेह निर्वेदाद्भव त्यागपरोऽव्रती ॥ १ ॥
कस्यापि तात ! धन्यस्य लोकचेष्टावलोकनात् ।
जीवितेच्छा बुभुक्षा च बुभुत्सोपशमं गताः ॥ २ ॥

---

अस्तु वा बाधितानुवृत्त्या दग्धपटोपमाना सर्वापि विषयदृष्टिर्बन्धहेतुस्तन्निवृत्तौ मोक्ष इति पूर्वमुक्तम्। तथापि अहङ्कारनिवृत्तौ मोक्षस्तदनिवृत्तौ बन्ध इति वदन्नेव शिष्योक्तमर्थमभिनन्दितुमनुवदति यदा नाहम् इति। यदाहम् इत्येवंरूपोऽहङ्काराध्यासोऽनर्थमूलभूतो निवर्त्तते तदा मोक्षः, यदा च सोऽनुवर्त्तते तदा बन्धनम् इति ज्ञात्वा, हेलया अनायासेन एव हानोपादानादिक्रियाणामकर्त्ता त्वमसि, अकर्त्रात्मज्ञानेन कर्त्तृत्वाभिमानो निवर्त्तत इति भावः ॥ ४ ॥

इति गुरूपोक्तं बन्धमोक्षचतुष्कं नाम अष्टमं प्रकरणं समाप्तम्।

शिष्योक्तानुभवस्यैव दार्ढ्यार्थं गुरुणोच्यते।
निर्वेदः अष्टमष्टाभिरिच्छादित्यजनात्मकः ॥ १ ॥

"मत्वेति हेलया किञ्चिन्मा गृहाण" इति यदुक्तम्, तत्र किं द्वारमित्यपेक्षायाम्, गुरुः अनुमोदनमुद्रया वैराग्याष्टकमाह कृता कृते इति। कृताकृते इदं कर्त्तव्यमिदमकर्त्तव्यमिति अभिनिवेशौ, द्वन्द्वानि सुखदुःखादीनि, कस्य, कदा वा शान्तानि निवृत्तानि, अपि तु न कस्यापि कदापि शान्तानि इत्यर्थः, एवं ज्ञात्वा, इह कृताकृतादिषु, निर्वेदात् अभिनिवेशादिपरित्यागादेव त्यागपरो भव। कीदृशस्त्वम् अव्रतो नास्ति व्रतं कुत्रापि आग्रहो यस्य सः ॥ १ ॥

अनित्यं सर्वमेवेदं तापत्रितयदूषितम् ।
असारं निन्दितं हेयमिति निश्चित्य शाम्यति ॥३॥
कोऽसौ कालो वयः किं वा यत्र द्वन्द्वानि नो नृणाम्
तान्युपेक्ष्य यथाप्राप्तवर्त्ती सिद्धिमवाप्नुयात् ॥ ४॥

---

चित्तधर्मत्यागरूपो निर्वेदस्तु कस्यचित् एव स्यात् न तु सर्वस्य इत्याह कस्यापि इति । हे तात शिष्य ! मनुष्येषु मध्ये कस्यचित् एव धन्यस्य उत्पत्तिविनाशरूपलोकचेष्टावलोकनात् जीवितेच्छा-भोगेच्छा-ज्ञानेच्छादयः उपशमं गताः । इदं तु तादृशं निर्वेदमत्यन्तश्रेयमभिनन्दितुमेव उच्यते, न तु उपदिश्यते इति प्रागुक्तमेव ॥ २ ॥

ननु प्राणिनां सर्वत्र इच्छोपशमः किं हेतुक इति अत आह अनित्यम् इति । इदं दृश्यमानं सर्वप्रपञ्चजातम् अनित्यं चैतन्येऽध्यस्तम् तथा पृथक् सत्त्वेन दृश्यमानं सत् आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयदूषितम्, अतएव असारं तुच्छम् असत् एव हेयं पृथक्सत्तया नैव आदरणीयम् इति निश्चित्य ज्ञानी शाम्यति कुत्रापि इच्छां न कुरुते ॥ ३ ॥

द्वन्द्वानामारब्धकर्मकत्वात् अवश्यम्भावित्वात् तत्र इच्छा-निवृत्तिं विहाय यथा प्रारब्धभोगी मुक्तिम् अवाप्नुयात् इत्याह कोऽसौ इति । यत्र नृणां द्वन्द्वानि सुखदुःखादीनि न सन्ति, असौ कः कालः, का वा बाल्यादिकयौवनरूपा शरीरावस्था, अपि तु न कापीति विचार्य तानि द्वन्द्वानि उपेक्ष्य तत्र इच्छामकृत्वा यथाप्राप्तेष्टानिष्टजनक वर्त्ती सिद्धिं मुक्तिम् अवाप्नुयात् इत्यर्थः ॥ ४ ॥

नाना मतं महर्षीणां साधूनां योगिनां तथा ।
दृष्ट्वा निर्वेदमापन्नः को न शाम्यति मानवः ॥५॥
कृत्वा मूर्तिपरिज्ञानं चैतन्यस्य न किं गुरुः ।
निर्वेदसमतायुक्त्या यस्तारयति संसृतेः ॥ ६ ॥
पश्य भूतविकारांस्त्वं भूतमात्रान् यथार्थतः ।
तत्क्षणात् बन्धनिर्मुक्तः स्वरूपस्थो भविष्यसि ॥७॥

---

तर्कशास्त्रादिशास्त्रेषु निष्ठा न कर्तव्या नानाविधविप्रतिपत्तिग्रस्तत्वात् नापि कर्मसु नापि चाष्टाङ्गयोगादिषु इत्याह नानामतम् इति। महर्षीणां गौतमजैमिनिप्रभृतीनां मतं नानाविधं परिच्छिन्नं दृष्ट्वा तर्कशास्त्रादिभ्यो निर्वेदमापन्नः, तथा साधूनां कर्मनिष्ठानां मतं नानाविधं केचित् होमपराः केचित् जपपराः केचित् कृच्छ्रचान्द्रायणादिपराः इति नानाविधं मतं दृष्ट्वा कर्मभ्योऽपि निर्वेदमापन्नः केवलमात्मानुसन्धाननिष्ठः को न शाम्यति सः सुखं न प्राप्नोति इत्यर्थः ॥ ५ ॥

केवलं ज्ञाननिष्ठामेवाश्रित्य कर्मादिकं मा कुर्वित्याह कृत्वा इति। निर्वेदसमतायुक्त्या निर्वेदो नाम विषयाभावविरक्तता शत्रुमित्रेषु समता सर्वत्र चात्मबुद्धिर्युक्तिर्नाम श्रुत्यनुग्राहकतर्कः, एतैः चैतन्यस्य सच्चिदानन्दस्य मूर्तिपरिज्ञानं स्वरूपसाक्षात्कारं कृत्वा तदनन्तरं नास्ति कश्चित्पुरुषार्थो यस्य स न किं गुरुः एवंविधो यः सः संसृतेः संसारात् चात्मानं तारयति ॥ ६ ॥

चैतन्यस्य स्वरूपज्ञानोपायमाह पश्य इति। हे शिष्य ! भूतविकारान् देहेन्द्रियादीन् यथार्थतः तत्त्वतः भूतमात्रान्

वासना एव संसार इति सर्वा विमुञ्च ताः ।
तत्त्यागो वासनात्यागात् स्थितिरद्य यथा तथा ॥८॥

---

अथ गुरुप्रोक्तमुपशमाष्टकं नाम दशमं प्रकरणं प्रारभ्यते ।

विहाय वैरिणं काममर्थं चानर्थसंकुलम् ।
धर्ममप्येतयोर्हेतुं सर्वत्रानादरं कुरु ॥ १ ॥

---

अस्य न तु आत्मस्वरूपात् एवं सति त्वं तत् क्षणात् बन्ध-निर्मुक्तः शरीराद्यभावनिर्मुक्तः सन् शरीरादिविविक्तात्म-स्वरूपस्थो भविष्यसि शरीरादावनात्मतया ज्ञाते सति तत्-साक्षिभूत आत्मा झटिति स्फुरेत् इति भावः ॥ ७ ॥

ननु एवमात्मनि ज्ञातेऽपि तत्र निष्ठा कथं स्यात् इत्याशङ्क्य वासनात्यागात् इत्याह वासना इति । वासना विषयवासना एव संसार इति कारणात् ता वासनाः सर्वा विमुञ्च वासना-त्यागात् च आत्मनिष्ठायां सत्यां तस्य संसारस्य त्यागः इत्यर्थः, अद्य अधुना वासनात्यागे सति स्थितिरपि यथा तथा प्रारब्धं तथैव इत्यर्थः ॥ ८ ॥

इति गुरुप्रोक्तं निर्वेदाष्टकं नाम नवमं प्रकरणं समाप्तम् ।

विषयाणामभावेऽपि तुष्टिर्निर्वेद ईरितः ।
तस्मिन्दार्ढ्यं च विषये वैतृष्ण्यं शान्तिरीर्यते ॥

विषयैर्विनापि सन्तोषरूपो निर्वेदः प्रागुक्तः । अथ इदानीं विषयतृष्णोपशममभिनन्दनमुद्रया गुरुरुदाहरति विहाय इति । कामं वैरिणं शत्रुम् विहाय तथा अनर्थसंकुलम् अर्थं रक्षणे नाशे वा अनेकशोकदुःखसंकुलम् अर्थं विहाय तथा

स्वप्नेन्द्रजालवत् पश्य दिनानि त्रीणि पञ्च वा ।
मित्रक्षेत्रधनागारदारदायादिसम्पदः ॥ २ ॥
यत्र यत्र भवेत् तृष्णा संसारं विद्धि तत्र वै ।
प्रौढवैराग्यमाश्रित्य वीततृष्णः सुखी भव ॥ ३ ॥
तृष्णामात्रात्मको बन्धस्तन्नाशो मोक्ष उच्यते ।
भवासंसक्तिमात्रेण प्राप्तितुष्टिर्मुहुर्मुहुः ॥ ४ ॥

---

एतयोः अनयोः कामार्थयोः हेतुं धर्ममपि विहाय सर्वत्र त्रिवर्गहेतुकर्मसु अनादरम् उपेक्षां कुरु ॥ १ ॥

ननु मित्रक्षेत्रादिफलकेषु कर्मसु कथमनादर इत्याशङ्क्य मित्रादीनामनित्यत्वमाह स्वप्न इति । हे शिष्य ! मित्रादिसम्पदः स्वप्नेन्द्रजालवत् पश्य यतो दिनानि त्रीणि पञ्च वा स्थायिन्य इत्यर्थः ॥ २ ॥

सर्वत्र अनादरं कुरु इति अनेनोक्तं वैतृष्ण्यं पुरुषार्थहेतुरित्याह यत्र यत्र इति । यत्र यत्र येषु अर्थितेषु विषयेषु तृष्णा भवेत् । तत्र तत्र तमेव संसारं विद्धि विषयतृष्णाया एव कर्मद्वारा संसारहेतुत्वात् । अतः प्रौढवैराग्यं प्राप्तेऽपि अर्थे प्रीत्यभावमास्थाय वीततृष्णः अप्राप्तार्थेच्छारहितः सन् न आत्मनिष्ठया सुखी भव इत्यर्थः ॥ ३ ॥

अमुमेवार्थं भङ्ग्यन्तरेणाह तृष्णामात्रात्मक इति । तृष्णामात्रस्वरूप एव बन्धः, कर्मवासनाद्वारा बन्धहेतुत्वात् तन्नाशः तृष्णानाश एव मोक्षो निवृत्तिहेतुत्वात् ।

"तन्नाशो मोक्ष" इति अत्र हेतुमाह भव इति । भवतीति भवो देहादिविषयस्तत्र देहादिविषये सङ्गाभावमात्रेण मुहु-

त्वमेकश्चेतनः शुद्धो जडं विश्वमसत्तथा।
अविद्यापि न किञ्चित्सा का बुभुत्सा तथापि ते॥५॥
राज्यं सुताः कलत्राणि शरीराणि सुखानि च।
संसक्तस्यापि नष्टानि तव जन्मनि जन्मनि॥ ६॥
अलमर्थेन कामेन सुकृतेनापि कर्मणा।
एभ्यः संसारकान्तारे न विश्रान्तमभूत् मनः॥ ७॥

---

मुहुः वारंवारं प्राप्तितुष्टिः आत्मप्राप्तिजः सन्तोषः स्यात् अतः तृष्णापगमे मोक्षः इत्यर्थः। प्राप्तिस्तुष्टिरिति पाठे प्राप्तिः स्यात् तृप्तिश्च स्यादित्यर्थः॥ ४॥

ननु बुभुत्सारूपा तृष्णा कथं त्याज्येत्याशङ्क्याह त्वमेक इति। इह जगति त्रय एव पदार्थाः आत्मा जगत् अविद्या च, तत्र आत्मा तावत् त्वम् एव एकश्चेतनः शुद्धो न तु भिन्न इति स्वात्मानमेव एवं पूर्णं प्राप्नोषि, न अन्या पुनरात्मबुभुत्सा युक्ता नापि जगद्बुभुत्सा, जगतः असत्त्वात् जडत्वाच्च, नापि अविद्याबुभुत्सा युक्ता, तस्या अपि सदसद्विलक्षणरूपतया अनिर्वचनीयत्वात् तथा च, तव बुभुत्सापि का युक्ता, न काचिदपि इत्यर्थः॥ ५॥

जडं विश्वमसत् इत्युक्तं तद्विशदयति राज्यम् इति। राज्यादीनि सर्वाणि, संसक्तस्यापि आसक्तिं कुर्वाणस्यापि तव, जन्मनि जन्मनि नानाजन्मसु, नष्टानि इत्यतो विश्वमसदित्यर्थः॥ ६॥

बुभुत्सापि न कर्तव्या इति प्रागुक्तमथ धर्मार्थकामेषु अपि इच्छा न कार्या इत्याह अलम् इति। अर्थादिना अलम् अर्थ-

कृतं न कति जन्मानि कायेन मनसा गिरा ।
दुःखमायासदं कर्म तदद्याप्युपरम्यताम् ॥८॥

---

अथ ज्ञानाष्टकं नाम एकादशं प्रकरणं प्रारभ्यते ।

भावाभावविकारश्च स्वभावादिति निश्चयी ।
निर्विकारो गतक्लेशः सुखेनैवोपशाम्यति ॥ १ ॥

---

धर्मकामेषु इच्छा न कार्य्या इत्यर्थः, अत्र हेतुमाह एभ्य इति । यतः कारणात्, संसारकान्तारे संसारलक्षणे दुर्गमे वर्त्मनि भ्राम्यतस्तव, एभ्यः धर्मकामार्थेभ्यः, विश्रान्तिश्च मनाविच्छेदो नाभूद्, अतो अर्थादिषु न तृष्णा कर्त्तव्या इत्यर्थः ॥ ७ ॥

तृष्णाया उपशमः प्रागुक्तः, अथ क्रियामात्रोपशममाह कृतम् इति । हे शिष्य । आयासदं प्रयासदम् अतएव दुःखदं कर्म, कायादिना कति जन्मानि न कृतम् अपि तु यावदद्य प्राचीनसर्वजन्मसु अपि कृतकर्मणा तु त्वयाधर्म [illegible] लब्धः, तत् तस्मात् अद्यापि अधुनापि कर्मभ्य उपरम्यताम् ॥८॥

इति गुरुप्रोक्तमुपशमाष्टकं नाम दशमं प्रकरणं समाप्तम् ।

उक्ता शान्तिर्न विज्ञानं विना कस्यापि जायते ।
इति निश्चितुमेवाह गुरुर्ज्ञानाष्टकम् ॥

उक्ता शान्तिर्विज्ञानादेव स्यात् न तु अन्यथेति बोधयितुं ज्ञानाष्टकमाह. तत्रादौ ज्ञानसाधनान्याह भाव इति । भावाभावरूपो विकारः स्वभावात् मायातत्संस्कारादेव जायते, न तु निर्विकारादात्मन इति निश्चयवान् पुरुषो निश्चयबलादेव सुखेन अनायासेन, एव उपशाम्यति ॥ १ ॥

ईश्वरः सर्वनिर्माता नेहान्य इति निश्चयी ।
अन्तर्गलितसर्वाशः शान्तः क्वापि न सज्जते ॥ २ ॥
आपदः सम्पदः काले दैवादेवेति निश्चयी ।
तृप्तः स्वस्थेन्द्रियो नित्यं न वाञ्छति न शोचति ॥ ३ ॥
सुखदुःखे जन्ममृत्यू दैवादेवेति निश्चयी ।
साध्यादर्शी निरायासः कुर्वन्नपि न लिप्यते ॥ ४ ॥

---

ननु मायाया जड़त्वात्तत एव कथं भावाभावविकार इत्याशङ्क्याह ईश्वर इति । ईश्वरः एव सर्वनिर्माता न तु अन्यो जीवः ईश्वरपरवशत्वात्, इति निश्चयी पुरुषो निश्चयवशादेव अन्तर्गलितसर्वाशः गतसर्वस्पृहः, अतएव शान्तो निश्चलचित्तः सन्, क्वापि न सज्जते ॥ २ ॥

ननु ईश्वर एव चेत् सर्वनिर्माता, तर्हि कांश्चिद्दरिद्रान्, कांश्चित् धनिनस्तथा कांश्चित् सुखिनः कांश्चित् दुःखिनो रचयतस्तस्य वैषम्यनैर्घृण्ये स्यातामित्याशङ्क्याह आपद इति । काले समयविशेषे, आपदः सम्पदश्च दैवात् प्राक्तनादृष्टादेव ईश्वरप्रतिपादितात् एव इति निश्चयी अतएव तृप्तो वीतस्पृहः अतएव नित्यं स्वस्थेन्द्रियो विषयानाकृष्टेन्द्रिय अप्राप्तं न वाञ्छति, नष्टं न शोचति इत्यर्थः ॥ ३ ॥

ननु ज्ञाननिश्चयवानपि कर्माणि कुर्वन्नेव बध्यत इत्याशङ्क्याह सुख इति । कर्मफलभूते सुखादिके दैवात् अदृष्टात् एव इति निश्चयी अतएव इदं मया इदं कार्यं साध्यमिति अदर्शी, अतएव निरायासः श्रमरहितः प्रारब्धवशात् कुर्वन्नपि

चिन्तया जायते दुःखं नान्यथेहेति निश्चयी ।
तया हीनः सुखी शान्तः सर्व्वत्र गलितस्पृहः ॥ ५ ॥
नाहं देहो न मे देहो बोधोऽहमिति निश्चयी ।
कैवल्यमिव सम्प्राप्तो न स्मरत्यकृतं कृतम् ॥ ६ ॥
आब्रह्मस्तम्बपर्य्यन्तमहमेवेति निश्चयी ।
निर्विकल्पः शुचिः शान्तः प्राप्ताप्राप्तविनिर्वृतः ॥७॥

---

न लिप्यते कर्मजानर्थभागी न भवति कर्तृत्वाध्यासरहितत्वात् इत्यर्थः ॥ ४ ॥

ननु कुर्वन् कथं निरायास इत्याशङ्क्याह चिन्तया इति । इह दुःखं चिन्तया जायते न अन्यथा इति निश्चयी अतएव च तया चिन्तया हीनः, अतएव शान्तः स्थिरान्तःकरणः, अतएव सर्व्वत्र सुखतत्साधनयोः गलितस्पृहः पुरुषः सुखी भवति इत्यर्थः ॥ ५ ॥

ज्ञानसाधनैः सिद्धज्ञानिनां निजदशां निरूपयति नाहम् इति । अहं देहो न तथा मे देहो न किन्तु नित्यबोधोऽहमिति ज्ञानवशात् देहादौ निवृत्ताहम्ममाभिमानः देहादीनां कृतम् अकृतं च मया कृतमिति न स्मरति । यथा कैवल्यं विदेह-कैवल्यं प्राप्य कृताकृतं न स्मरति तद्वदित्यर्थः ॥ ६ ॥

आब्रह्म इति । ब्रह्माणं हिरण्यगर्भमारभ्य तृणस्तम्बपर्य्यन्तं सर्व्वं जगत् अहमेवेति प्रत्ययनिश्चयवान् पुरुषः निर्विकल्पः सङ्कल्पविकल्पशून्यः अतएव शुचिः विषयासङ्गरूपमलरहितः, अतएव शान्तो निश्चलान्तःकरणः, अतएव प्राप्ताप्राप्तयोरपि विषययोर्निर्वृतः परमसन्तोषवान् आत्मानन्दपूर्णत्वात् इत्यर्थः॥७॥

नानाश्चर्यमिदं विश्वं न किञ्चिदिति निश्चयी।
निर्वासनः स्फूर्तिमात्रो न किञ्चिदिव शाम्यति॥८॥

---

अथ एवमेवाष्टकं नाम द्वादशप्रकरणम्।

कायकृत्यासहः पूर्वं ततो वाग्विस्तरासहः।
अथ चिन्तासहस्तस्मादेवमेवाहमास्थितः॥ १॥

---

ननु आत्मज्ञानी कथं निर्विकल्पादिरूप इत्याशङ्क्याह नाना इति। अधिष्ठानतत्त्वसाक्षात्कारेणाध्यस्तबाधे सति नानाश्चर्यम् इदं विश्वं जगत् न किञ्चित् पृथक् सत्ताशून्यम् इति निश्चयी पुरुषः निरस्तवासनः केवलचिद्रूपः सन् न किञ्चित् इव विश्वव्यवहारागोचर एव शाम्यति निरस्तकार्यकारणोपाधिर्भवति। तत्त्वज्ञानेन सर्वस्यापि प्रपञ्चनिरस्तमेवेत्यर्थः॥ ८॥

इति ज्ञानाष्टकं नाम एकादशं प्रकरणं समाप्तम्।

अथ एवमेवाष्टकं नाम द्वादशं प्रकरणं प्रारभ्यते।

गुरुणोदीरितं ज्ञानं न किञ्चिदिव शाम्यति।
तत्स्वानुभवसिद्धं तु शिष्यो वदति साम्प्रतम्॥

उक्तं ज्ञानाष्टकेन "न किञ्चिदिव शाम्यति" इति। तदेव शिष्यः, स्वस्मिन् विशदयितुमेवमेवाष्टकमाह। तत्र प्रथमं कायवाङ्मनसां व्यापारोपरममाह काय इति। अहं पूर्वम् अपि कायिकरूपकर्मासहः, ततो हेतोः वाग्विस्तरासहः जपकर्मासहः, अथ यतो मनोव्यापाररूपा या चिन्ता तत्र असहस्तस्माद् हेतोः, एवमेव निर्व्यापार एव अहमास्थितः आत्ममग्न एव, स्थित इत्यर्थः॥ १॥

प्रीत्यभावेन शब्दादेरदृश्यत्वेन चात्मनः।
विक्षेपैकाग्रहृदय एवमेवाहमास्थितः॥ २ ॥
समाध्यासादिविक्षिप्तौ व्यवहारः समाधये।
एवं विलोक्य नियममेवमेवाहमास्थितः॥ ३ ॥
हेयोपादेयविरहादेवं हर्षविषादयोः।
अभावादद्य हे ब्रह्मन्नेवमेवाहमास्थितः॥ ४ ॥

---

उक्तव्यापारत्रयोपरमहेतुं वदन्नेव उक्तमनुवदति प्रीत्यभावेन इति। अचिन्त्यफलजनकस्य शब्दादेः शब्दकायकर्मद्वयस्य, प्रीत्यभावेन प्रीत्यविषयत्वेन, आत्मनश्च अदृश्यत्वेन, त्रिविधविक्षेपेभ्यो व्याहृतं एकाग्रं हृदयं यस्य स विक्षेपैकाग्रहृदय इति मध्यमपदलोपी समासः। अचिन्त्यफलजनकस्य जपादेः प्रीत्यविषयत्वाज्जपादिरूपो विक्षेपो न ममास्ति, आत्मनश्चादृश्यत्वात् ध्यानाद्यविषयत्वाच्चिन्तारूपोऽपि विक्षेपो मम नास्तीत्यर्थः। अतएवमेव स्वस्वरूपेण एव, अहमास्थितः॥ २ ॥

ननु तथापि समाध्यर्थं व्यवहारः कर्त्तव्य इत्याशङ्क्याह, न इत्याह समाध्यासादि इति।

कर्त्तृत्वभोक्तृत्वात् अनर्थाध्यासादिभिः विक्षिप्तौ सत्यां तन्निरासार्थम् समाधौ व्यवहारो मान्यथेति नियमं विलोक्य यदात्मनि ममाध्यासाभावादेव समाधिशून्य एवाहमास्थित इत्यर्थः॥ ३ ॥

हेय इति। पूर्वापरदर्शिनो मम हेयोपादेयवस्तुनो विरहात्, अतएवम् अमुना प्रकारेण। हर्षविषादयोः अपि अभा-

आश्रमानाश्रमं ध्यानं चित्तस्वीकृतवर्जनम्।
विकल्पं मम वीक्ष्यैतैरेवमेवाहमास्थितः ॥ ५ ॥
कर्मानुष्ठानमज्ञानाद्यथैवोपरमस्तथा।
बुध्वा सम्यगिदं तत्त्वमेवमेवाहमास्थितः ॥ ६ ॥
अचिन्त्यं चिन्त्यमानोऽपि चिन्तारूपं भजत्यसौ।
त्यक्त्वा तद्भावनं तस्मादेवमेवाहमास्थितः ॥ ७ ॥
एवमेव कृतं येन स कृतार्थो भवेदसौ।
एवमेव स्वभावो यः स कृतार्थो भवेदसौ ॥ ८ ॥

---

बात्, हे भगवन् गुरो! अद्य अधुना, अहमेवमेवास्थित इत्यर्थः ॥ ४ ॥

आश्रम इति। आश्रमानाश्रमम् ध्यानं च तथा तत्-प्रयुक्तं चित्तस्वीकृतवर्जनं च एतैस्त्रिभिरेव मम विकल्पं सङ्कल्पविकल्पं वीक्ष्य अहमेवमेव एतत्त्रयरहित एव, आस्थितः ॥ ५ ॥

कर्म इति। यथैव कर्मानुष्ठानमज्ञानात्, तथैवोपरमः कर्मोपरमोऽपि अज्ञानादेव, इदम्, सम्यक् यथावत्तो, बुध्वा एवं कर्मतदुपरमरहित एव अहमास्थितः ॥ ६ ॥

अचिन्त्यम् इति। अचिन्त्यं ब्रह्मेति चिन्त्यमानोऽपि असौ आत्मचिन्तात्मकं रूपं भजति, तस्मात् हेतोः तद्भावनम्, अचिन्त्यं ब्रह्मेति भावनं त्यक्त्वा अहमेवमेव भावनारहित एव आस्थितः ॥ ७ ॥

एव मेव इति अवस्थायाः बाधकोऽपि नेहः, किं पुनस्तत्-

अथ यथासुखसप्तकं नाम त्रयोदशप्रकरणम्।

अकिञ्चनभवं स्वास्थ्यं कौपीनत्वेऽपि दुर्लभम्।
त्यागादाने विहायास्मादहमासे यथासुखम्॥ १॥
कुत्रापि खेदः कायस्य जिह्वा कुत्रापि खिद्यते।
मनः कुत्रापि तत्त्यक्त्वा पुरुषार्थे स्थितः सुखम्॥२॥

---

स्वभाव इति कैमुतिकन्यायेन आह एवमेव इति। येन एवमेव सर्वक्रियारहितमेव स्वरूपम् साधनवशात् ज्ञातम् सोऽसौ कृतार्थो भवेत्। यः तु एवमेव स्वभाववान् सोऽसौ कृतार्थो भवतीति किं वक्तव्यमित्यर्थः॥ ८॥

इत्येवमेवाष्टकं नाम द्वादशं प्रकरणं समाप्तम्।

एवमेवेत्यवस्थायाः फलीभूतां सुखस्थितिम्।
आह शिष्यः स्फुटीकर्तुमहमासे यथासुखम्॥

अथ "एवमेव" इति अवस्थायाः फलीभूतां सुखावस्थां स्वकीयां विमर्दयितुमाह अकिञ्चन इति। अकिञ्चनभवं सर्वसङ्गाभावजन्यम् स्वास्थ्यं चित्तस्वैर्थ्यम्, कौपीनत्वेऽपि कौपीनमात्रस्यापि दुर्लभम् अस्मात् कारणात् अहं त्यागादाने विहाय त्यागादानयोरासक्तिं विहाय यथासुखं सुखमनतिक्रम्य अहमासे। न कदाचित् दुःखीत्यर्थः॥ १॥

कुत्रापि इति। कुत्रापि शरीरकर्मणि। कायस्य खेदः कुत्रापि वर्णनकर्मणि, जिह्वा खिद्यते, कुत्रापि ध्यानादिकर्मणि, मनः खिद्यते, अतोऽहं तत्त्रयम् अपि त्यक्त्वा सुखं यथा स्यात्तथा, पुरुषार्थे आत्मन्येव, स्थितः॥ २॥

कृतं किमपि नैव स्यादिति संचिन्त्य तत्त्वतः ।
यदा यत्कर्तुमायाति तत्कृत्वासे यथासुखम् ॥२॥
कर्मनैष्कर्म्यनिर्बन्धभावा देहस्थयोगिनः ।
संयोगायोगविरहादहमासे यथासुखम् ॥ ३ ॥
अर्थानर्थौ न मे स्थित्या गत्या न शयनेन वा ।
तिष्ठन् गच्छन् स्वपन् तस्मादहमासे यथासुखम् ॥४॥
स्वपतो नास्ति मे हानिः सिद्धिर्यत्नवतो न वा ।
नाशोल्लासौ विहायास्मादहमासे यथासुखम् ॥५॥

---

ननु कायवाङ्मनोव्यापाराभावे दुःखमेव तथा परलोकसाधनानुष्ठानादेरपि त्यागादित्याशङ्क्याह कृतम् इति। शरीरेन्द्रियादिभिः कृतं किमपि तत्त्वतः आत्मकृतम् न स्यादिति संचिन्त्य, यदा यत् शरीरादिधर्मं, कर्तुमायाति, तत् अहङ्कारशून्यत्वेन कृत्वा, अहं यथासुखम् आसे ॥ २ ॥

ननु कर्म वा नैष्कर्म्यं वा एकतरनिर्बन्धः योगिनां, पुरुषार्थोपनिमित्तत्वादत आह कर्मेति। कर्मनैष्कर्म्यनिर्बन्धरूपा भावाः। देहस्थयोगिनः देहाभिमानयोगिन एव। अहं तु देहसंयोगासंयोगविरहादपि यथासुखम् आसे, तथा च मम देहाद्यध्यासाभावात् कर्मनैष्कर्म्यनिर्बन्ध इत्यर्थः ॥ ३ ॥

अथ लौकिकव्यापारेऽपि मम निर्बन्धो नास्तीत्याह अर्थाविति। मम स्थित्यादिना कौचित् अर्थानर्थौ न स्तः, पूर्णानन्दस्वरूपत्वात्, तस्मात् यथाप्राप्तम्, तिष्ठन् गच्छन् स्वपन् वा, अहम् यथासुखमासे ॥ ४ ॥

अथ तत्त्वोपदेशविशेषतिवर्णनम् नाम पञ्चदशप्रकरणम्।

यथा तथोपदेशेन कृतार्थः सत्त्वबुद्धिमान्।
आजीवमपि जिज्ञासुः परस्तत्र विमुह्यति॥ १ ॥
मोक्षो विषयवैरस्यं बन्धो वैषयिको रसः।
एतावदेव विज्ञानं यथेच्छसि तथा कुरु॥ २ ॥

---

स्वच्छन्दचारिणः प्राणिनो दशास्तादृशा एव प्राणिन एव, जानते ॥ ४ ॥

इति शिष्यमोक्षे शान्तिचतुष्टयं नाम चतुर्दशप्रकरणं समाप्तम्।

---

दुर्लक्ष्यमात्मनस्तत्त्वं प्रत्याययितुमञ्जसा।
मुमुक्षुस्तत्त्वोपदेशार्थं गुरुराह दयोदधिः॥

यद्यपि प्रथममात्मतत्त्वोपदेशः कृत एव, तथापि तदात्मतत्त्वमन्तेवासिभ्यः शिष्येभ्यः पुनः पुनरुपदेष्टव्यं दुर्लभत्वात्, यथा छान्दोग्योपनिषदि नवकृत्वः श्वेतकेतुं प्रति आचार्यशिष्यार्थमसकृदात्मोपदेशं गुरुराह, तत्रादौ ज्ञानाधिकारित्वमनधिकारित्वं चाह यथा तथा इति। सत्त्वबुद्धिमान् शिष्यो, यथा तथा आपाततोऽपि उपदेशेन कृतार्थः स्यात्, अतएव, कृतयुगे प्रथममात्रोपदेशादपि शिष्याः कृतार्थाः बभूवुः, परः असत्त्वबुद्धिः, यावज्जीवं जिज्ञासुः अपि, बहुधा उपदिष्टोऽपि विमुह्यति, यथा विरोचनो ब्रह्मणा बहुधा उपदिष्टोऽपि मुमोहैवेत्यर्थः ॥ १ ॥

अथ बन्धमोक्षौ सुखोपायेन संक्षेपेण निरूपयति मोक्ष इति। विषयेषु अनुरागाभाव एव मोक्षः, विषयेषु अनु-

वाग्मिप्राज्ञमहोद्योगं जनं मूकजडालसम्।
करोति तत्त्वबोधोऽयमतस्त्यक्तो बुभुक्षुभिः ॥ ३ ॥
न त्वं देहो न ते देहो भोक्ता कर्त्ता न वा भवान्।
चिद्रूपोऽसि सदा साक्षी निरपेक्षः सुखं चर ॥ ४ ॥
रागद्वेषौ मनोधर्मौ न मनस्ते कदाचन।
निर्विकल्पोऽसि बोधात्मा निर्विकारः सुखं चर ॥ ५ ॥

---

रागस्तु बन्ध इत्यर्थः। एवं तावदेव बन्धमोक्षयोः विशिष्टम् उत्कृष्टं ज्ञानम्, एवं ज्ञात्वा च त्वम्, यथा इच्छसि तथा कुरु ॥ २ ॥

इदं तु विषयवैरस्यं तत्त्वबोधसाध्यमित्याह वाग्मि इति। अयं प्रसिद्धः, आत्मतत्त्वबोधः, वाग्मिनं जनं बहुचतुरवाक्यभाषिणम्, मूकं करोति, प्राज्ञं नानाविषयवेदिनं जनं जडं करोति, महोद्योगं नानाक्रियानुष्ठानशालिनं अलसं निष्क्रियं करोति, मनसः प्रत्यक् प्रवणतया वागादयः कुण्ठिता भवन्ति, ज्ञानी तद्रहितो भवतीत्यर्थः, यतोऽयं तत्त्वबोधः वागादीन् कुण्ठितान् करोति अतो भोगेच्छुभिः त्यक्तः, अनादृत इत्यर्थः ॥ ३ ॥

तत्त्वबोधविचारमुपदिशति न त्वम् इति। त्वं देहादिरूपो न भवसि, यतः चिद्रूपोऽसि, न ते तव देहसम्बन्धः। "असङ्गो ह्ययं पुरुषः" इति श्रुतेः, न वा भवान् कर्त्ता भोक्ता, यतः कर्तृभोक्तृप्रभृतीनां सदा साक्षी, यो यत् साक्षी स तद्भिन्नः, यथा घटसाक्षी घटाद्भिन्न इत्यर्थः। अतस्त्वं देहतत्सम्बन्धिषु अनपेक्षः सन्, सुखं चर इत्यर्थः ॥ ४ ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
विज्ञाय निरहङ्कारो निर्ममस्त्वं सुखी भव ॥ ६ ॥
विश्वं स्फुरति यत्रेदं तरङ्गा इव सागरे।
तत्त्वमेव न सन्देहश्चिन्मूर्ते! विज्वरो भव ॥ ७ ॥
श्रद्धत्स्व तात! श्रद्धत्स्व नात्र मोहं कुरुष्व भोः!।
ज्ञानस्वरूपो भगवानात्मा त्वं प्रकृतेः परः ॥ ८ ॥

---

रागद्वेषौ तु मनोधर्मौ न तु तव धर्मौ, मनस्तु कदाचिदपि तव सम्बन्धि न भवति, अतस्तदध्यासाद्रागाद्यध्यासं मा कुरु इत्यर्थः। ननु रागद्वेषौ ममैव धर्मौ, कथं न इत्याशङ्क्याह निर्विकल्प इति। यतस्त्वं निर्विकल्पः बोधात्मा च असि अतो रागादिविकाररहितः सन्, सुखं चर इत्यर्थः ॥ ५ ॥

सर्व इति। सर्वभूतेषु कारणत्वेन अनुस्यूतम् आत्मानं विज्ञाय विभाव्य, सर्वभूतानि आत्मनि अध्यस्तानि इति विभाव्य अहङ्कारादेः सर्वस्य आत्मत्वेन एव स्फुरणादहं ममाभिमानरहितः त्वं सुखी भव ॥ ६ ॥

सर्वभूतानि च आत्मनि इत्येतद्विशदयति विश्वम् इति। यत्र इदं विश्वम्। सागरे तरङ्गा इव अधिष्ठानाभिन्नं तत् चैतन्यम्, त्वमेव, अतःकारणात् हे चिन्मूर्ते, त्वं विज्वरो भव, चिदाभासोऽहमित्यनुभवाविहतसर्वसन्तापो भव इत्यर्थः ॥ ७ ॥

परमश्रद्धाविषयतया पुनः पुनर्बोधयति श्रद्धत्स्व इति। श्रद्धत्स्व तात! श्रद्धत्स्व। अत्र चिद्रूपतायामसम्भावनाविपरीतभावनारूपं मोहं मौढ्यमविवेकं मा कुरुष्व मा कार्षीरित्यर्थः।

तवैवाज्ञानतो विश्वं त्वमेकः परमार्थतः।
त्वत्तोऽन्यो नास्ति संसारी नासंसारी च कश्चन॥१६॥
भ्रान्तिमात्रमिदं विश्वं न किञ्चिदिति निश्चयी।
निर्वासनः स्फूर्तिमात्रो न किञ्चिदिव शाम्यति॥१७॥
एक एव भवाम्भोधावासीदस्ति भविष्यति।
न ते बन्धोऽस्ति मोक्षो वा कृतकृत्यः सुखं चर॥१८॥
मा सङ्कल्पविकल्पाभ्यां चित्तं क्षोभय चिन्मय!।
उपशाम्य सुखं तिष्ठ स्वात्मन्यानन्दविग्रहे॥१९॥

---

प्रतिभानः सन् सुखी भव। द्वितीयप्रतिभानाद्धि दुःखं भवतीत्यर्थः॥ १५॥

विभागत्यागे युक्तिमाह तवैव इति। तवैव अज्ञानतो विश्वं विश्वाकारविक्षेपः, अतः परमार्थतः त्वमेकः, अतः संसारी असंसारी च त्वत्तो न अन्यः कश्चिदित्यर्थः॥ १६॥

भ्रान्तिमात्रम् इति। इदं विश्वं भ्रान्तिमात्रमिदम्। अतो हेतोः न किञ्चित् पृथक् सत्तारहितमित्यर्थः, इति निश्चयी, अतएव सर्वस्य निरस्तत्वात् निर्वासनो वासनारहितः, स्फूर्तिमात्रः सन् न किञ्चिदिव निरस्ताशेषविक्षेपः सन्, शाम्यति॥१७॥

एक एव इति। कालत्रयेऽपि भवाम्भोधौ एकः त्वम् एव। अतएव बन्धमोक्षौ न स्तः। अतस्त्वं कृतकृत्यः सन् सुखं चर॥ १८॥

मा सङ्कल्प इति। हे चिन्मय! त्वं सङ्कल्पविकल्पाभ्यां चित्तं

त्यजैव ध्यानं सर्वत्र मा किञ्चिद्धृदि धारय ।
आत्मा त्वं मुक्त एवासि किं विमृश्य करिष्यसि ॥२०॥

---

मा क्षोभय, उपशाम्य उपरतसङ्कल्पविकल्पो भव, आनन्द-रूपे आत्मनि सुखं तिष्ठ ॥ १८ ॥

ध्यानमपि त्यजेत्याह त्यज इति ।

सर्वत्र ध्यानं त्यज कुत्रापि ध्यानं मा कार्षीरित्यर्थः ।

एतदेव विशदयति मा किञ्चित्हृदि धारय इति ।

मननमपि त्यजेत्याह । आत्मा इति । आत्मा त्वं सदा मुक्त एवासि, अतो विमृश्य विचार्य, किं फलं करिष्यसि नित्यमुक्तत्वादित्यर्थः ॥ २० ॥

इति तत्त्वोपदेशविंशतिकं नाम पञ्चदशप्रकरणं समाप्तम् ।

## अथ विशेषोपदेशकं नाम षोडशप्रकरणम् ।

**आचक्ष्व शृणु वा तात ! नानाशास्त्राण्यनेकशः ।**
**तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ १ ॥**
**भोगं कर्म समाधिं वा कुरु विज्ञ ! तथापि ते ।**
**चित्तं निरस्तसर्वाशमत्यर्थं रोचयिष्यति ॥ २ ॥**
**आयासात् सकलो दुःखी नैनं जानाति कश्चन ।**

---

पृथक्सत्त्वेन सर्वस्य विस्मृतिर्मुक्तिसाधनम् ।
तृष्णाद्यमर्थविच्छेदद्वारेणेत्यत्र वर्ण्यते ॥

तत्त्वज्ञानेन सर्वप्रपञ्चस्य पृथक्सत्तया विस्मरणकारणेऽत्र तृष्णापायादिद्वारा मुक्तिर्भवतीति विशेषमुपदिशति आचक्ष्व इति। हे तात ! त्वं नानाशास्त्राणि अनेकशः अनेकवारं शिष्येभ्यः आचक्ष्व, गुरुभ्यः शृणु वा, तथापि तव सर्वविस्मरणादृते स्वास्थ्यं श्रेयो नास्तीत्यर्थः। ननु सुषुप्तौ सर्वविस्मरणं सर्वेषां विद्यत एव, तेन सर्वेषां मोक्षः स्यादिति व्यर्थं सर्वविस्मरणमिति चेत्, सत्यं, सुषुप्तौ तु यद्यपि विषयविस्मरणमस्ति, तथापि अज्ञानविस्मरणं नास्ति इति सर्वविस्मरणाभावात्, जीवन्मुक्तस्य तु अज्ञानादेः सर्वस्याप्यनुसन्धानरूपं विस्मरणमस्तीति भावः ॥ १ ॥

सर्वविस्मरणे सति सर्वसुखरूपं मोक्षं चित्तं निरस्तसर्वाशं भवति इति सूचयन्नाह। भोगम् इति। हे विज्ञ ! त्वं भोगं कुरु कर्म वा कुरु समाधिं वा कुरु। तथापि चित्तमत्यर्थं रोचयिष्यति स्वरूपे रुचिमुत्पादयिष्यति। कीदृशं चित्तं निरस्तसर्वाशं सर्वविस्मरणे सति सर्वाशानुदयादित्यर्थः ॥ २ ॥

अनेनैवोपदेशेन धन्यः प्राप्नोति निर्वृतिम् ॥ ३ ॥
व्यापारे खिद्यते यस्तु निमेषोन्मेषयोरपि ।
तस्यालस्यधुरीणस्य सुखं नान्यस्य कस्यचित् ॥४॥
इदं कृतमिदं नेति द्वन्द्वैर्मुक्तं यदा मनः ।
धर्मार्थकाममोक्षेषु निरपेक्षं तदा भवेत् ॥ ५ ॥
विरक्तो विषयद्वेष्टा रागी विषयलोलुपः ।
ग्रहमोक्षविहीनस्तु न विरक्तो न रागवान् ॥ ६ ॥

---

सर्वतृष्णाविलये सति तु कृतेनापि कर्मणा दुःखहेतुरायासो न भवतीति सूचयन्नाह । आयासात् इति । सकलो जनः आयासात् एव दुःखी भवति । परन्तु कश्चन एतं आयासम् न जानाति दुःखहेतुरयमिति न वेत्ति ।

अनेन इति । आयासात् सकलो दुःखीति अनेनैवोपदेशेन धन्यः सुकृती, निर्वृतिं परमसुखं प्राप्नोति ॥ ३ ॥

व्यापारानासक्तिः सुखहेतुरित्याह व्यापार इति । यो निमेषोन्मेषयोरपि व्यापारे खिद्यते अनासक्तो भवति, तस्य आलस्यधुरीणस्य क्रियाभिनिवेशरहितस्य सुखं, न अन्यस्य क्रियाभिनिवेशयुक्तस्य ॥ ४ ॥

सर्वतृष्णाविलये सति द्वन्द्वहानिरपि भवतीति सूचयन्नाह इदं कृतम् इति । इदं कृतमिदं न इति आदि द्वन्द्वैर्मुक्तं यदा मनो भवति, तदा पुरुषार्थचतुष्टयेऽपि निरपेक्षं भवेत् । द्वन्द्वातीतस्य जीवन्मुक्तत्वात् इत्यर्थः ॥ ५ ॥

पुरुषार्थकामनानिरपेक्षस्तु विरक्तकामुकाभ्यां विलक्षण इत्याह विरक्त इति । मुमुक्षुः सन् यो विषयद्वेष्टा स विरक्तः

हेयोपादेयता तावत् संसारविटपाङ्कुरः ।
स्पृहा जीवति यावद्वै निर्विचारदशास्पदम् ॥७॥
प्रवृत्तौ जायते रागो निवृत्तौ द्वेष एव हि ।
निर्द्वन्द्वो बालवद्धीमानेवमेव व्यवस्थितः ॥ ८ ॥
हातुमिच्छति संसारं रागी दुःखजिहासया ।

---

कथ्यते । कामनासापेक्षः सन् यो विषयलोलुपः स रागी इति कथ्यते, यस्तु बन्धमोक्षविहीनः बन्धमोक्षेच्छाभ्यां विहीनः, स विरक्तरक्ताभ्यां विलक्षणः सर्वतो निरपेक्षतया हानोपादानेच्छारहितत्वादित्यर्थः ॥ ६ ॥

ननु ज्ञानिनोऽपि हानोपादानादिव्यवहारो दृश्यते इति तत्राह हेयोपादेयता इति । निर्विचारदशास्पदम् अविवेकदशास्पदीभूता, स्पृहा, इच्छा, यावत् जीवति, तावत्पर्यन्तमेव हेयोपादेयता हेयोपादानादिव्यवहारः, संसार-वृक्षस्य शाखाङ्कुरो भवति, ज्ञानिनां तु स्पृहाभावे सत्यपि हानोपादानादिव्यवहारे संसारशाखाङ्कुरो न भवति इत्यर्थः ॥ ७ ॥

प्रवृत्तौ इति । प्रवृत्तौ सरागप्रवृत्तौ सत्याम् उत्तरोत्तरं विषयेषु रागो जायते । विषयेऽपि द्वेषपूर्वकनिवृत्तौ सत्याम् उत्तरोत्तरं विषयेषु द्वेष एव हि जायते, अतो धीमान् ज्ञानी, बालवत् शुभाशुभानुसन्धानरहितः, निर्द्वन्द्वः रागद्वेषविहीनः सन् एव, रागजनितप्रवृत्तिद्वेषजनितनिवृत्तिरहित एव स्थितः केवलं प्रारब्धवशात् एव कदाचित्प्रवर्तते कदाचिन्निवर्तते च । न तु रागद्वेषवशात् इत्यर्थः ॥ ८ ॥

हातुमिच्छति इति । यस्तु रागी स दुःखजिहासया संसारं

वीतरागो हि निर्दुःखस्तस्मिन्नपि न खिद्यति ॥९॥
यस्याभिमानो मोक्षेऽपि देहेऽपि ममता तथा ।
न च ज्ञानी न वा योगी केवलं दुःखभागसौ ॥१०॥
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ ११ ॥

अथ तत्त्वज्ञस्वरूपविंशतिकं नाम सप्तदशप्रकरणं प्रारभ्यते ।

तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा ।
तृप्तः स्वच्छेन्द्रियो नित्यमेकाकी रमते तु यः ॥ १॥

---

हातुमिच्छति, वीतराग: तु निर्दुःख: रागोत्थदुःखरहितत्वात् तस्मिन् संसारे सति अपि न खिद्यति खेदं न प्राप्नोति ॥ ९ ॥

यस्याभिमान इति । अहं ज्ञानी त्रिकालहस्तामलकदर्शी मुक्त इत्येवं यस्य मोक्षेऽपि अभिमानो न असौ ज्ञानी, तथा च, अहं योगाभ्यासी देहस्यैव गुणकर्मधर्मरत:, मम देहो जटाभारोपवासादिसमर्थ इत्येवं देहेऽपि अभिमानो न असौ योगी न वा ज्ञानी, केवलं असौ दुःखभाक् दुःखहेत्वहंममाभिमानानिवृत्तेरित्यर्थ: ॥ १० ॥

सर्वविस्मरणोपदेशमुपसंहरति हर इति । स्पष्टम् ॥ ११ ॥

इति विशेषोपदेशं नाम षोडशप्रकरणम् ।

---

अथातः श्लोकविंशत्या तत्त्वज्ञस्य दशोच्यते ।
विद्यातज्ज्ञप्रकर्षस्य व्यक्तये गुरुणा स्फुटम् ॥

अथ अन्येषामपि विद्यायां प्रवृत्त्यर्थं तत्त्वज्ञानफलं व्याख्यातुमिच्छया तत्त्वज्ञदशां गुरुर्निरूपयति तेन इति । तेन एव

न कदाचिज्जगत्यस्मिन् तत्त्वज्ञो हन्त खिद्यति॥
यत एकेन तेनेदं पूर्णं ब्रह्माण्डमण्डलम् ॥ २ ॥
न जातु विषयाः केऽपि स्वारामं हर्षयन्त्यमी।
सल्लकीपल्लवप्रीतमिवेभं निम्बपल्लवाः ॥ ३ ॥
यस्तु भोगेषु भुक्तेषु न भवत्यधिवासिता।
अभुक्तेषु निराकाङ्क्षी तादृशो भवदुर्लभः ॥ ४ ॥
बुभुक्षुरिह संसारे मुमुक्षुरपि दृश्यते।

---

ज्ञानफलं प्राप्तं, य आत्मन्येव तृप्तो न भोगादिना, अतएव शान्तेन्द्रियो विषयाणामग्रेन्द्रियः सन् एकाकी विषयसंयोगं विनैव नित्यं आत्मन्येव रमते ॥ १ ॥

न कदाचित् इति। हन्त इति सम्बोधने, हे शिष्य! अस्मिन् जगति कदाचित् अपि तत्त्वज्ञो न खिद्यते, यत एकेन एव तेनेदं ब्रह्माण्डमण्डलं पूर्णं व्याप्तम् अतो द्वितीयस्याभावात् न खिद्यतीत्यर्थः ॥ २ ॥

न जातु इति। स्वस्मिन्नात्मन्येव आरमते तं स्वारामं, जातु कदाचित् अमी विषयाः न हर्षयन्ति तुच्छत्वात्, पृथक्-सत्तामप्राप्येव रमते तं स्वारामं जातु कदाचित् अमी विषया न हर्षयन्ति इन्द्रियरहितत्वात्। यथा सल्लकीपल्लवप्रीतम्, इभं गजं, निम्बपल्लवा न हर्षयन्ति कटुकत्वात् इत्यर्थः ॥ ३ ॥

यस्तु इति। यस्य तु भुक्तेषु भोगेषु आसक्तिर्न भवति, अभुक्तेषु आकाङ्क्षा न भवति आत्मज्ञत्वात् तादृशो भवदुर्लभः संसारसागरे कोटिष्वेक इत्यर्थः ॥ ४ ॥

बुभुक्षुः इति। संसारे बुभुक्षुर्मुमुक्षुः च अनेकधा दृश्यते।

भोगमोक्षनिराकाङ्क्षी विरलो हि महाशयः ॥ ५ ॥

धर्मार्थकाममोक्षेषु जीविते मरणे तथा ।
कस्याप्युदारचित्तस्य हेयोपादेयता न हि ॥ ६ ॥

वाञ्छा न विश्वविलये न द्वेषस्तस्य च स्थितौ ।
यथा जीविकया तस्माद्धन्य आस्ते यथासुखम् ॥७॥

कृतार्थोऽनेन ज्ञानेनेत्येवं गलितधीः कृती ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखम् ८

---

भोगमोक्षनिराकाङ्क्षी महति पूर्णे ब्रह्मणि आशयोऽन्तःकरणं यस्य स महाशयो विरलः । "यततामपि सिद्धानां कश्चित् मां वेत्ति तत्त्वतः" इति भगवद्वचनात् ॥ ५ ॥

धर्मार्थ इति । पुरुषार्थचतुष्टये तथा जीवितमरणयोर्यथायोग्यं हेयोपादेयतारहितो विरल इत्यर्थः ॥ ६ ॥

वाञ्छा इति । यस्मात् ज्ञानिनो विश्वविलये प्रपञ्चोपरमे वाञ्छा न अस्ति, तस्य प्रपञ्चस्य स्थितौ च द्वेषः न अस्ति, अधिष्ठानत्वेनैव ब्रह्मरूपात्मस्फुरणात्, तस्मात् कारणात्, धन्यो यो विद्वानारब्धवशात् प्राप्तया यथा प्राप्तया जीविकया सुखम् अनतिक्रम्यैव आस्ते इत्यर्थः ॥ ७ ॥

कृतार्थ इति । अहम् अनेन अद्वैतात्मज्ञानेन कृतार्थः इत्येवं गलितधीः कृती श्रवणादिकं कुर्वन्नपि, सुखम् अनतिक्रम्य आस्ते कृतार्थत्वधियः सत्वाद्बहिरिन्द्रियव्यापारे सत्यपि अज्ञानिन इव विरक्तस्य तस्य खेदो न भवति । "उपविष्टो व्रजन् तिष्ठन् तन्मयः स्यात् समाहितः" इति वचनात् न भवति इत्यर्थः ॥ ८ ॥

शून्या दृष्टिर्वृथा चेष्टा विकलानीन्द्रियाणि च ।
न स्पृहा न विरक्तिर्वा क्षीणसंसारसागरे ॥ ९ ॥
न जागर्त्ति न निद्राति नोन्मीलति न मीलति ॥
अहो परदशा क्वापि वर्त्तते मुक्तचेतसः ॥ १० ॥
सर्वत्र दृश्यते स्वस्थः सर्वत्र विमलाशयः ।
समस्तवासनामुक्तो मुक्तः सर्वत्र राजते ॥ ११ ॥

---

शून्या इति । क्षीणः संसारसागरो यस्य सः तस्मिन् क्षीण-संसारसागरे पुरुषे, स्पृहा विषयेष्वपि न विरक्तिः च न । यतः तस्य मनःकायेन्द्रियव्यापारो बालोन्मत्तादिवत् इत्याह शून्येति । तस्य दृष्टिर्मनोव्यापारः शून्या संकल्पविकल्परहिता, चेष्टा कायव्यापारः । वृथा फलमनुद्दिश्यैव तस्य इन्द्रियाणि विकलानि पुरःस्थितानामपि विषयाणामनिर्णायकत्वात् तदुक्तं भगवद्गीतायां "यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" इति ॥ ९ ॥

न जागर्त्ति इति । ज्ञानी न जागर्त्ति जाग्रदवस्थावान् न भवति । यत्र बहिर्विषयाननुसन्धानादिति हेतुमाह नोन्मीलति इति । बाह्यविषयान् नानुसन्धत्ते इत्यर्थः । तथा ज्ञानी न निद्राति यतः न निमीलति अज्ञोऽजनवत्, सर्वान् विषयान् ब्रह्मत्वेन पश्यतीत्यर्थः । का तर्हि तस्य दशेत्यत आह अहो इति । अहो इति आश्चर्ये मुक्तचेतसः क्वापि अलौकिकी परदशा उन्मनावस्था तुरीयातीतेत्यर्थः ॥ १० ॥

इदमेव विशदयति सर्वत्र इति । सर्वत्र सुखे दुःखे च स्वस्थः शान्तचित्तः । तथा सर्वत्र एव शत्रौ मित्रे च विमलाशयः

पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गृह्णन् वदन् व्रजन्
ईहितानीहितैर्मुक्तो मुक्त एव महाशयः ॥ १२ ॥
न निन्दति न च स्तौति न हृष्यति न कुप्यति ।
न ददाति न गृह्णाति मुक्तः सर्वत्र नीरसः ॥१३॥
सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितम् ।
अविह्वलमनाः स्वस्थो मुक्त एव महाशयः ॥१४॥
सुखे दुःखे नरे नार्यां सम्पत्सु च विपत्सु च ।
विशेषो नैव धीरस्य सर्वत्र समदर्शिनः ॥ १५ ॥
न हिंसा नैव कारुण्यं नौद्धत्यं न च दीनता ।

---

समानदर्शी, यतः समस्तविषयवासनाभ्यो मुक्तः, अतएव मुक्तः सर्वत्र सर्वासु दशासु राजते दीप्यते पूर्णात्मदर्शित्वात् ॥ ११ ॥

पश्यन् इति। प्रारब्धवशाद्दर्शनादिकं बहिरिन्द्रियव्यापारं कुर्वन्नपि ईहितानीहितैः इच्छाद्वेषैः मुक्तो महाशयो महति आत्मनि आशयो यस्य स महाशयः मुक्त एव मनो विकारातीतत्वात् ॥ १२ ॥

इदमेव विशदयति न निन्दति इति। स्पष्टं, न स्तौति न हर्षं प्राप्नोति न चैव कोपं करोतीत्यर्थः। कस्मैचित् न गृह्णाति सर्वत्र नीरसः मुक्त इत्यर्थः ॥ १३ ॥

किञ्च सानुरागाम् इति। सानुरागां स्त्रियं दृष्ट्वा अथ वा समुपस्थितं मृत्युं दृष्ट्वा अविह्वलमनाः कामभयाभ्यां विमुक्तमनाः महाशयो मुक्त एव ॥ १४ ॥

किञ्च सुखे इति। स्पष्टम् ॥ १५ ॥

न हिंसा इति। लोकसंस्कारवशे अपरे नराभिमानरहिते

नाश्चर्यं नैव च क्षोभः क्षीणसंसरणे नरे ॥१६॥

न मुक्तो विषयद्वेष्टा न वा विषयलोलुपः ।
असंसक्तमना नित्यं प्राप्तं प्राप्तमुपाश्नुते ॥ १७ ॥

समाधानासमाधानहिताहितविकल्पनाः ।
शून्यचित्तो न जानाति कैवल्यमिव संस्थितः ॥१८

निर्ममो निरहङ्कारो न किञ्चिदिति निश्चितः ।
अन्तर्गलितसर्वाशः कुर्वन्नपि करोति न ॥ १९ ॥

मनःप्रकाशसम्मोहस्वप्नजाड्यविवर्जितः ।
दशां कामपि सम्प्राप्तो भवेद्गलितमानसः ॥२०॥

---

विदुषि, हिंसा नाम परद्रोह इत्यादयो मनोविकारा न भवन्तीत्यर्थः ॥ १६ ॥

न मुक्त इति । जीवन्मुक्तः विषयद्वेष्टा अपि न, न वा विषयलोलुपः किं तर्हि असंसक्तमनाः सन् प्रारब्धवशात् प्राप्तं प्राप्तमुपाश्नुते भुङ्क्ते इत्यर्थः । १७ ।

समाधाना इति । किञ्च शून्यचित्तो ज्ञानी, समाधानादि-विविधाः कल्पना न जानाति स्वयं सन्नपि विदेहकैवल्यं प्राप्त इव । १८ ।

निर्मम इति । अयं ममाभिमानशून्यतयाहङ्कारविनिर्मुक्तः "किञ्चित् न सत्" इति निश्चयवान्, अतएव अन्तर्गलित-सर्वाशः, अतएव कुर्वन्नपि न करोति कर्तृत्वाभिमानरहितत्वात् इत्यर्थः । १९ ।

मनः इति । गलितं सर्वसङ्कल्पविहीनं मानसं यस्य सः ज्ञानी, कामपि अनिर्वाच्यां दशां सम्प्राप्तो भवेत् । तदेव दर्श-

अथ शान्तिशतकं नाम अष्टादशप्रकरणम्।

यस्य बोधोदये तावत् स्वप्नवद्भवति भ्रमः।
तस्मै सुखैकरूपाय नमः शान्ताय तेजसे॥ १॥
अर्जयित्वाऽखिलानर्थान् भोगानाप्नोति पुष्कलान्।
न हि सर्वपरित्यागमन्तरेण सुखी भवेत्॥ २॥

---

यति मनःप्रकाशविवर्जितः। सविशेषप्रकाश[illegible]ात्, तथा स्वप्नोद्यवर्जितः प्रत्यक्प्रवणचित्तत्वात्। अतएव [illegible]प्नवर्जितः आयेन सुषुप्त्या च विवर्जित इत्यर्थः॥ २०॥

इति तत्त्वस्वरूपविंशतिकं नाम सप्तदशप्रकर[illegible]।

---

तत्त्वाभिज्ञे फलीभूतसमस्येव प्रधानताम्।
ख्यापयितुं वर्ण्यते शान्तिः शतश्लोकैः पुनः स्फु[illegible]॥

तत्र तावत् शान्तेः प्रधानतांति ख्यापयितुं फलीभू[illegible] शान्तिं वर्णयितुकामः, शान्तिशालिनं नमस्करोति यस्य इति। बोधोदये सति तावत् तत्क्षणमेव प्रपञ्चभ्रमः, स्वप्नवत् तुच्छो यस्य जातो भवति। तस्मै शान्ताय निवृत्तसङ्कल्पविकल्पाय अतएव सुखैकरूपाय दुःखाननुविद्धसुखस्वभावाय अतएव तेजसि स्व-प्रकाशाय विदुषे नमः॥ १॥

ननु धनिनोऽपि सुखिनो दृश्यन्ते तत्कथं शान्तस्यैव एव सुखैकरूप इत्याशङ्क्याह अर्जयित्वा इति। अखिलान् अर्थान् धनधान्यकान्तादीन् अर्जयित्वा, पुष्कलान् बहुविधान् भोगान् एव आप्नोति। न तु सुखैकरूपः स्यात् तत्क्षये दुःखभागि-त्वात् सर्वपरित्यागमन्तरेण सर्वसङ्कल्पविकल्पत्यागं विना, सुखैकरूपो न हि भवति नैव स्यात्॥ २॥

कर्तव्यदुःखमार्तण्डज्वालादग्धान्तरात्मनः ।
कुतः प्रशमपीयूषधारासारमृते सुखम् ॥ ३ ॥
भवोऽयं भावनामात्रो न किञ्चित् परमार्थतः ।
नास्त्यभावः स्वभावानां भावाभावविभाविनाम् ॥ ४
न दूरं न च सङ्कोचाल्लब्धमेवात्मनः पदम् ।

---

सङ्कल्पविकल्पयोस्तुच्छत्वज्ञानमेव त्यागमात्रस्य तत्त्वात् । यथा वन्ध्यापुत्रे तुच्छत्वज्ञानमेव त्यागः अतः त्यागाभ्यासात्, इदमेव रूपकालङ्कारेण विशदयति कर्तव्य इति । कर्तव्यानि यानि कर्माणि, तज्जनितानि दुःखानि एव मार्तण्डज्वाला ज्वलत्सूर्यसन्तापस्तेन दग्धः अन्तरात्मा मनो यस्य तस्य सङ्कल्पविकल्पप्रशमामृतधारावर्षमासारं विना सुखं कुतः स्यात् ॥ ३ ॥

सङ्कल्पविकल्पप्रशमस्य अद्भुतत्वं संसाररूपविषनिवर्तकत्वात् इत्याशयेनाह भवोऽयम् इति । अयं भवः भावनामात्रः सङ्कल्पमात्रप्रभवः, परमार्थतः आत्मव्यतिरिक्तं किञ्चित् न अस्ति परमार्थतस्तु आत्मैव भावरूपः । न तु अभावरूपः । ननु अभावरूपोऽपि प्रपञ्चः कालादिवशात् भावस्वभाव इत्याशङ्क्याह नास्ति इति । भावाभावेषु विभाविनां स्थितानाम्, स्वभावानाम् अभावो नास्ति । न हि उष्णस्वभावो वह्निः कदाचिदपि शीतस्वभावो दृष्टः । तथा च मनोराज्यसद्भावनामात्रसिद्धः सत्स्वभावः प्रपञ्चो भावनानिवृत्तौ निवर्तत इति सङ्कल्पप्रशमसंसारविषतापापगमात् आत्मामृतप्राप्तिहेतुत्वात् सुखतममिति भावः ॥ ४ ॥

ननु सङ्कल्पोपशममात्रेण कथमात्मस्वरूपप्राप्तिरित्याशङ्क्य

निर्विकल्पं निरायासं निर्विकारं निरञ्जनम् ॥५॥
व्यामोहमात्रविरतौ स्वरूपादानमात्रतः ।
वीतशोका विराजन्ते निरावरणदृष्टयः ॥ ६ ॥
समस्तं कल्पनामात्रमात्मा मुक्तः सनातनः ।
इति विज्ञाय धीरो हि किमभ्यस्यति बालवत् ॥७॥
आत्मा ब्रह्मेति निश्चित्य भावाभावौ च कल्पितौ ।

---

तस्य नित्यप्राप्तत्वमाह न दूरम् इति। आत्मनः पदं स्वरूपं दूरं न अस्ति। न अपि सङ्कोचात् वर्त्तते परिच्छिन्नं नास्ति, परिपूर्णत्वात्। अत एवात्मनः पदं नित्यलब्धं प्राप्तमेवास्ति। सङ्कल्पवशात् पुनरप्राप्तमिवाविद्वांसो मन्यन्ते, कण्ठगतचामीकरवत्। कीदृशं पदं, निर्विकल्पं विकल्पातीतं विकल्पाभावगम्यं वा, तथा, निरायासम् आयासातीतं तदभावगम्यं वा, निर्विकारं विकारातीतम्। निरञ्जनम् उपाधिमलशून्यम् ॥ ५ ॥

कथं तर्हि तत्त्वज्ञानेन तत्प्राप्तिव्यवहारः शास्त्रकारणमित्याशङ्क्य भ्रान्तिनाशमात्रादेवेत्याह व्यामोह इति। ज्ञानेन निरावरणदृष्टयः अविद्यानाहतदृष्टयः व्यामोहमात्रस्य प्रपञ्चभ्रान्तिमात्रस्य विरतौ सत्यां, स्वरूपादानमात्रतः आत्मविश्रान्तिमात्रतो वीतशोका विराजन्ते सर्वदा स्वभावेनैव पूर्णाद्वितीयतया प्रकाशन्त इत्यर्थः ॥ ६ ॥

आत्मज्ञानरहस्यमाह समस्तमिति। स्पष्टार्थमिदम् ॥७॥

समस्तकल्पनामात्रमिति ज्ञानस्य निदानभूतं तत्त्वं पदार्थैक्यज्ञानमाह आत्मा इति। आत्मा त्वं पदार्थः, ब्रह्म

निष्कामः किं विजानाति किं ब्रूते च करोति
किम्॥ ८॥

अयं सोऽहमयं नाहमिति क्षीणा विकल्पना।
सर्वमात्मेति निश्चित्य तूष्णीम्भूतस्य योगिनः॥ ९॥

न विक्षेपो न चैकाग्र्यं नातिबोधो न मूढता।
न सुखं न च वा दुःखमुपशान्तस्य योगिनः॥ १०॥

---

तत्पदार्थाभिन्न इति निश्चित्य अधिष्ठानसाक्षात्कारात् च भावाभावौ घटादिः तदभावः च कल्पितौ इति निश्चित्य, तथा च सर्वस्य तुच्छत्वानुसन्धानात् कामशैत्यविद्याविजयात् च निष्कामः सन्, किं विशिष्टतया, जानाति किं ब्रूते, किं च कार्यं करोति, कर्तृत्वाभिमानरहितत्वात् ज्ञातापि न वक्तापि न क्रियाकर्तापि नेत्यर्थः॥ ८॥

सर्वमात्मेति ज्ञानं सर्वकल्पनानिवर्तकमित्याह अयमिति। सर्वमात्मेति निश्चित्य अनुभूय, तूष्णीम्भूतस्य निरुद्धवाग्व्यापारस्य, योगिनः "वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत मुक्तोऽयं योग उच्यते॥" इति योगलक्षणं समुन्नीतम्। इति विविधाः कल्पनाः क्षीणा भवन्ति, इतीति किम्? अहं करोमि य एवाहं पूर्वदिने तमकरवं, सोऽहं यजामि, अयं देवदत्तो गच्छति, नाहं गमिष्यामीत्यादयः कल्पनाः क्षीणा भवन्तीत्यर्थः॥ ९॥

निरस्तसङ्कल्पस्य स्वरूपमाह। द्वाभ्यां न विक्षेप इति। उपशान्तचित्तस्य योगिनः, विक्षेपो व्यग्रता न, एकाग्रतादिकमपि नेत्यर्थः॥ १०॥

७

स्वाराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने ।
निर्विकल्पस्वभावस्य न विशेषोऽस्ति योगिनः ॥११॥
क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकिता ।
इदं कृतमिदं नेति द्वन्द्वैर्मुक्तस्य योगिनः ॥१२॥
कृत्यं किमपि नैवास्ति न कापि हृदि रञ्जना ।
यथा जीवनमेवेह जीवन्मुक्तस्य योगिनः ॥ १३ ॥
क्व मोहः क्व च वा विश्वं क्व तद्ध्यानं क्व मुक्तता ।
सर्वसङ्कल्पसीमायां विश्रान्तस्य महात्मनः ॥ १४ ॥

---

स्वाराज्य इति । स्वाराज्ये स्वर्गराज्ये, भैक्ष्यवृत्तौ च प्रारब्धवस्तुलाभे तदभावे, जने जनसमूहे, वने विजने च, विशेषो योगिनो नास्ति । कीदृशस्य विकल्परहित-स्वभावस्येत्यर्थः ॥ ११ ॥

क्व धर्म इति । इदं कृतमिदं न कृतमित्यादि द्वन्द्वैर्मुक्तस्य योगिनः धर्मार्थकामाः, विवेकिता मोक्षोपायभूतो विवेकश्च न भवति, तन्मूलभूताविद्याकामसङ्कल्पादीनां विनाशादित्यर्थः ॥ १२ ॥

कथं तर्हि जीवन्मुक्तस्य लोके क्रियेत्याशङ्क्य जीवनादृष्टवशादेवेत्याह कृत्यमिति । जीवन्मुक्तस्य योगिनः सङ्कल्पवशात् किमपि कृत्यं नैवास्ति तथा, हृदि मनसि कापि रञ्जना कोऽपि अनुरागो न अस्ति, तद्धेतुभूताया विद्याया अभावात्, तथापि अस्य कृत्यं यथा जीवनं जीवनादृष्टमनतिक्रम्य भवतीत्यर्थः ॥ १३ ॥

क्व मोह इति । सङ्कल्पसीमायाम् आत्मबुद्धौ विश्रान्तस्य

येन विश्वमिदं दृष्टं स नास्तीति करोतु वै ।
निर्वासनः किं कुरुते पश्यन्नपि न पश्यति ॥ १५ ॥
येन दृष्टं परं ब्रह्म सोऽहं ब्रह्मेति चिन्तयेत् ।
किं चिन्तयति निश्चिन्तो द्वितीयं यो न पश्यति१६
दृष्टो येनात्मविक्षेपो निरोधं कुरुते त्वसौ ।
उदारस्तु न विक्षिप्तः साध्याभावात्करोति किम्१७
धीरो लोकविपर्य्यस्तो वर्त्तमानोऽपि लोकवत् ।

---

मोक्षादिकं न भवति, किं कारणमाश्रित्य भवति, न किमपि कारणमाश्रित्य भवति, पाकबुद्ध्या कारणोपमर्दादित्यर्थः ॥१४॥

येन इति । येन दृष्टं विश्वं घटपटादि दृष्टं, स तदाश्रितसंस्कारः कदाचित् घटादिकं नास्तीति करोतु वै नास्तीति जानातु । यः पश्यन्नपि न पश्यति स निर्वासनः सन् किं कुरुते, यद्विषयकः संस्कारोऽपि नास्ति, तस्य कर्तृत्वाद्यभावादित्यर्थः ॥ १५ ॥

येन इति । येन परं व्यतिरिक्तं ब्रह्म दृष्टं, स परं ब्रह्मेति चिन्तयेत्, यः तु द्वितीयं न पश्यति, स निश्चिन्तः सर्वचिन्तारहितः सन् किं चिन्तयति, न किमपि चिन्तयति, अद्वितीयात्मानुभवशालिनि ब्रह्मचिन्तनमपि नास्तीत्यर्थः ॥ १६ ॥

ज्ञानिनश्चित्तनिरोधोऽपि नास्तीत्याह दृष्ट इति । येन आत्मविक्षेपः चित्तादिभ्रमो दृष्टः, असौ पुरुषः, चित्त-निरोधं कुरुते विक्षेपपरिहारार्थम् । उदारः सर्वत्राद्वितीयात्मदर्शी तु विक्षिप्त एव न भवति न विक्षेपपरिहारलक्षणस्य साध्याभावात्, किं कुरुते कथं निरोधं कुरुत इत्यर्थः ॥ १७ ॥

